श्लोककृदहꣳ श्लोककृदहꣳ श्लोककृत् । श्लोकः कीर्तिस्तां करोतीति श्लोककृत् । व्याख्यातमन्यत् । पूर्वं वाक्यत्रयेण संबोधनेनात्मनात्मनश्श्लोककृत्त्वमात्मन उक्त्वा लोकत्रयीं प्रति विभागेन कार्यकारणरूपत्वमात्मन आह—अहमानन्दात्मा । अस्मि भवामि । प्रथमजाः प्रथमजो हिरण्यगर्भ इत्यर्थः । ऋता३स्य, ऋतस्य मूर्तामूर्तात्मकस्य सत्यस्य प्रपञ्चस्य कर्ता प्रथम इत्यर्थः । ऋता इति प्लुतिराश्चर्यार्था ।

ननु—संसारात्पूर्वं देवाः प्रसिद्धा इत्यत आह—पूर्वं प्रथमः । देवेभ्यो विराडवयवभूतेभ्योऽग्न्यादिभ्यः । अमृतस्यामरणधर्मिणो वेदस्य । ना३भायि नाभिर्मध्यम् । वेदरहस्यमित्यर्थः । अत्रापि नकारे प्लुतिराश्चर्यार्था । कार्यकारणहीनोऽसङ्गोदासीनोऽहं वेदगर्भ इत्येवंरूप इति योऽन्नस्य दाताऽऽत्मनो वा सर्वाभिन्नस्य तत्त्वमसीत्यादिवाक्येभ्यो दाता क्षुधार्तेभ्यः संसारतापतप्तेभ्यो वा । मा माम् । अन्नमानन्दात्मरूपं वा ददाति प्रयच्छति । स उक्तो दाता । इदित्थं दानं कुर्वन् । एवमनेन दानेन । आ३वाः, अवोऽवतीत्यर्थः । अकारप्लुतिराश्चर्यार्था । मां सर्वाभिन्नमपि रक्षतीति ।

ननु—अन्ने दीयमाने कथं भवान्दत्त इत्यत आह—अहमन्नं व्याख्यातम् । ननु—अन्नस्य दानेनाऽऽत्मनो वा त्वद्रक्षणजं सुकृतं भवतु दातर्यस्य तु तस्मिन्नाभिलाषः स तु त्वामन्नमात्मानं वा परस्मै मा प्रयच्छतु । भक्षयतु स्वयं कामभक्षं कोऽस्यानर्थ इत्यत आह—अन्नमदनीयं मां तद्रूपमात्मानं वाऽदत्त्वा । अदन्तं भक्षयन्तम् । आ३द्मि, अद्मि भक्षयाम्यन्नमभक्षकम् । अकारे प्लुतिराश्चर्यार्था । सर्वाभिन्नोऽप्येवं भक्षयामीति ।

ननु—यथा त्वमेनं भक्षयसि तथा त्वामप्यन्यः । यथा मण्डूकः क्षुद्रं जीवं तं सर्पः सर्पं मकरो विश्वस्य विचित्रशक्तिभूताक्रान्तत्वात्ततो न भयतः प्राप्तिः पुरुषार्थ इत्यत आह—अहमानन्दात्मा विश्वं निखिलं भुवनं भवन्त्यस्मिन्भूतानीति भवनं भवनमेव भुवनम् । अविद्या तत्कार्यं तत्संस्कारजातं कार्यकारणरूपमित्यर्थः । अभ्यभवा३मभ्यभवं स्वकीयेनाऽऽनन्दात्मरूपेण देशकालवस्तुपरिच्छेदशून्येन चरमवृत्तिसाक्षात्कारविषयेण निखिलमिदमात्मरूपकारणेन परिभवामि । अतो न मम कश्चन भक्षकः किंत्वहमेव सर्वस्य । ततो न मत्प्राप्तिरपुरुषार्थ इत्यर्थः ।

ननु—सर्वमिदेऽन्येभ्यः कस्त्वैश्वर्यातिशय इत्यत आह—सुवर्न सुवर्णस्तत्समानवर्ण आदित्य इव सुवर्णः । ज्योतीज्योतिः प्रकाशः स्वयंप्रकाशानन्दरूपोऽहं ततो मय्यैश्वर्यातिशय इत्यर्थः । इदानीं श्रुतिराह—योऽधिकारी । एवमुक्तप्रकारमानन्दात्मानम् ।

---

१ क. 'मथ इ' । २ ख. 'त्मत्सद' । ३ क. ग. 'स्त्वति' । ४ ख. 'द—सुवर्णत' । ५ ख. 'भ्यस्त्यति' ।

वेद जानाति साक्षात्करोतीत्यर्थः । सोऽपीमाँल्लोकानित्यादिनोक्तं फलं प्राप्नोतीत्यभिप्रायः । इत्युपनिषत् । व्याख्यातं पूर्ववल्ल्याम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां तैत्तिरीयोपनिषद्दीपिकायां तृतीये भृगुवल्ल्यध्याये दशमोऽनुवाकः ॥ १० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दात्मपूज्यपादशिष्यस्य श्रीशंकरानन्दभगवतः कृतौ तैत्तिरीयोपनिषद्दीपिकायां तृतीयो भृगुवल्ल्यध्यायः समाप्तः ॥ ३ ॥

====

8352

समाप्तेयं शंकरानन्दी तैत्तिरीयोपनिषद्दीपिका ॥